‘माटे’ इत्युपाह्वत्र्यम्बकविरचितः

# आचारेन्दुः

कुलपतेः प्रो०राममूर्तिशर्मणः प्रस्तावनया विभूषितः

सम्पादकः

डॉ० व्यासमिश्रः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

सरस्वतीभवन-ग्रन्थमाला
[ १४० ]

'साटे' इत्युपाह्वत्र्यम्बकविरचितः

# आचारेन्दुः

कुलपतेः प्रो० राममूर्तिशर्मणः प्रस्तावनया विभूषितः

सम्पादकः

डॉ० व्यासमिश्रः




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 140 ]

# ĀCĀRENDU

OF

## ŚRĪ TRYAMBAKA 'MĀṬE'

*FOREWORD BY*

**PROF. RAMMURTI SHARMA**

VICE-CHANCELLOR

*EDITED BY*

**DR. VYĀSA MIŚRA**

Senior Lecturer and Head

Department of Dharmaśāstra

Sampurnanand Sanskrit University, Varanasi




VARANASI

2000

*Research Publication Supervisor*—
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

ISBN : 81-7270-025-3



*Published by*—
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at*—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



**First Edition,** 500 Copies

**Price** : Rs. 316.00



*Printed by*—
**Durga Graphics**
Nepali Khapra, Varanasi-221 001

सरस्वतीभवन-ग्रन्थमाला

[ १४० ]

'माटे' इत्युपाह्वत्र्यम्बकविरचितः

# आचारेन्दुः

कुलपतेः प्रो० राममूर्तिशर्मणः प्रस्तावनया विभूषितः


सम्पादकः

**डॉ० व्यासमिश्रः**

वरिष्ठप्राध्यापकोऽध्यक्षश्च, धर्मशास्त्रविभागे

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी






**वाराणस्याम्**

२०५७ तमे वैक्रमाब्दे १९२२ तमे शकाब्दे २००० तमे खैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः —*

**निदेशकः, अनुसन्धान-संस्थानस्य**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी।

ISBN : 81-7270-025-3

❐

*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

***निदेशकः, प्रकाशनसंस्थानस्य***

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी-२२१००२

❐

*प्राप्ति-स्थानम् —*

**विक्रय-विभागः,**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१००२

❐

**प्रथमं संस्करणम्** – ५०० प्रतिरूपाणि

**मूल्यम्** – ३१६.०० रूप्यकाणि

❐

*मुद्रकः —*

**दुर्गा ग्राफिक्स**

नेपाली खपड़ा, वाराणसी-२२१००१

# प्रस्तावना

साम्प्रतं धर्मशास्त्रविभागाध्यक्षेण डॉ. व्यासमिश्रमहानुभावेन सम्पादितः **'आचारेन्दुः'** इति ग्रन्थ इन्दुरिव स्वकीयैर्मयूखैः स्नपयति विद्वत्प्रकाशपरिप्लुष्टं समस्तं संस्कृतशेवधिशेमुषीकं सुरवाङ्मयम्। **'माटे'** इत्युपाह्वेन **श्रीत्र्यम्बकाचार्येण** विरचितम् 'आचारेन्दुः' इति ग्रन्थं प्रकाशयता स्वकीयया प्रस्तावनया समर्थयता जायते मे मनसि महान् प्रमोदः। ग्रन्थरत्नमिदं धर्मशास्त्रीयान् विषयान् सङ्कलय्य त्र्यम्बकाचार्येण नानाशास्त्रसङ्ग्रहात्मकं लिखितम्, अष्टादशशताब्द्यामिति विदाङ्कुर्वन्त्येव विद्वद्धुरीणाः। ग्रन्थेऽस्मिन् आचारविषये, व्यवहारविषये, सन्ध्यावन्दनादि-विषये, तर्पणादिविषये, नानाविधपूजनोपचारादिविषये च गभीरतरा चर्चा सोदाहरणं कृता वर्तत इति ग्रन्थावलोकनेन स्फुटतरं ज्ञातुं शक्यते।

वस्तुतो ग्रन्थोऽयं लोकव्यवहारानुबन्धी। धर्मशास्त्रीयविषयाणां नित्यनैमित्तिकानां व्यवहारप्रस्तावानाञ्च सुष्ठु निदर्शनं पुङ्खानुपुङ्खतयाऽ-त्रावलोकयितुं शक्यते। विभावयन्तु तावत् काँश्चन श्लोकान् लोकानुबन्धिपरान्—

**कौशेयं कम्बलं चैव अजिनं पट्टमेव च ।**<br>
**दारुजं तालपत्रं वा आसनं परिकल्पयेत् ।।**<br>
**कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ।**<br>
**वशाजिने व्याधिनाशः कम्बले दुःखमोचनम् ।।**

**अभिचारे नीलवर्णं रक्तं वश्यादिकर्मणि ।**<br>
**शान्तिके कम्बलः प्रोक्तः सर्वेष्टं चित्रकम्बले ।।**

एवंविधं ग्रन्थरत्नं लोकव्यवहारपरं सम्पादयता धर्मशास्त्रविभागाध्यक्षेण श्रीव्यासमिश्रेण स्वकीयभूमिकायां बहुविधानि मौलिकानि तथ्यान्यन्वेषितानि, तदर्थमनुयुनज्मि धन्यवादैः साधुवादैश्च **डॉ.व्यासमिश्र**महोदयम्। नित्य-

नैमित्तिकयजनयाजनपरा यावन्तो व्यवहारा व्याहाराश्च लोकेऽस्मिन् दृश्यन्ते, तेषां स्रोतांसि तु शास्त्राण्येव। ऋते शास्त्रं लोकव्यवहार: कथमपि स्वत्त्वं ख्यापयितुं नालम्। उक्तञ्च भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम्—

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**

**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।।**

एतस्मिन् ग्रन्थे ये ये विषया: सङ्कलिता लेखकेन **त्र्यम्बकाचार्येण** तदर्थं तेभ्यो नमोवाकं प्रशास्महे। ग्रन्थस्यास्य सम्पादक: **डॉ. व्यासमिश्र**महानुभावोऽपि धन्यवादै: संयोज्यते। एतस्य ग्रन्थरत्नस्य मुद्रणे प्रकाशने च येषां प्रकाशननिदेशक-**डॉ. हरिश्चन्द्रमणित्रिपाठि**-ईक्ष्यशोधनप्रवीण-**डॉ. हरिवंशकुमारपाण्डेय**-सहायकसम्पादक-**डॉ. ददन-उपाध्याय**-ईक्ष्यशोधक-**श्रीअशोककुमारशुक्ल-श्रीअतुलकुमारभाटिया-श्रीकन्हईसिंहकुशवाहा-श्रीओमप्रकाशवर्म**प्रभृतीनां श्लाघनीय: सहयोग उपलब्ध:, तेभ्य: सर्वेभ्य: शुभाशीर्वादपुरस्सरं धन्यवादान् वितरामि। ग्रन्थस्यास्य मुद्रणे कृतसहयोगाय **श्रीउदयअग्रवाल**महानुभावायापि सुष्ठुतरमुद्रणार्थम् आशीर्वादं प्रयच्छन्नन्ते ग्रन्थरत्नमिदं सान्नपूर्णाय श्रीकाशीविश्वेश्वराय समुपहरामि।

राममूर्तिशर्मा

**वाराणस्याम्**
कार्तिकपूर्णिमायाम्,
वि.सं. २०५७

**राममूर्तिशर्मा**
*कुलपति:*
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

।। श्रीः ।।

विद्यानिवास मिश्र

फैक्स/फोन नं० (०५४२) ३५६३०९
बृन्दा, एम ३ बादशाह बाग
वाराणसी-२२१००२

दिनाङ्क - १३.०२.१९९९

'आचारेन्दु' संकलनात्मक ग्रन्थ है। छपा इस शताब्दी में, परन्तु पिछली शताब्दी के अन्त में लिखा गया है। लेखक त्र्यम्बक माटे हैं। यह सम्प्रति अप्राप्य है। इसमें हिन्दू आचार के विविध पक्षों जैसे सन्ध्या-वन्दन, दैनन्दिन जीवन (जिसमें स्नान, भोजन, शयन, होम, जप-पूजन, पूजन-द्रव्य, पूजन-वस्त्र, तर्पण, शौचाशौच, बलिवैश्वदेव, भोजन, ताम्बूल आदि) के विषय में अनेक ग्रन्थों से उद्धरण देकर विधि-विधान दिया गया है। इस ग्रन्थ की सबसे बड़ी विशेषता यह है कि इसमें सनातन आचार-विधि, जो परम्परा में इस समय तक चली आ रही है, सप्रमाण समझायी गयी है। जो प्रमाण दिये गये हैं, वे प्रमाण स्मृतियों और निबन्धों के हैं। इस समय इस आचार का बहुत बड़ा भाग बहुत सीमित प्रयोग में ही होगा, तो भी इसकी उपादेयता इसमें है कि सम्पूर्ण आचार-विधि का इसमें आकलन है। इसके आधार पर एक-एक विषय पर अलग शोधकार्य भी हो सकता है।

डॉ॰ व्यास मिश्र ने इसको पुनः सम्पादित किया है और यथोचित स्थानों पर टिप्पणियाँ भी दी हैं। डॉ. मिश्र ने अपनी भूमिका में लेखक के व्यक्तित्व और कृतित्व पर भी प्रकाश डाला है। इस अप्राप्य ग्रन्थ का पुनः प्रकाश में लाना ही इसका उद्देश्य नहीं, इसको सम्यक् रीति से प्रस्तुत करना भी इसके पीछे बहुत बड़ा उद्देश्य है। मैं व्यास मिश्र को इसके लिए साधुवाद देता हूँ।

विद्यानिवास मिश्र

(विद्यानिवास मिश्र)

# भूमिका

**शास्त्राणां हितोपदेशिता**

भारतीयसंस्कृतेरात्मतत्त्वं हृदयङ्गमं कर्त्तुं तस्या अजस्रप्रवाहस्य ज्ञानमावश्यकम् । अधुना वयं स्वकीयस्वरूपात् स्वभावात् स्वधर्माच्चैतादृशा अपरिचिताः जाताः, येन भारतीयसंस्कृतेराधारभूतो व्यापको जीवनानुभवो यो हिन्दूधर्म इत्यभिधीयते तत्परिभाषां कर्त्तुमपि न शक्नुमः । न च तत् समुदात्तया भावनया सह सामरस्यमपि स्थापयितुं पारयामः । हिन्दूधर्मः उपासनायाः पद्धतिमात्रं नास्ति । अपि तु एकं समग्रं जीवनदर्शनं व्यवहारप्रक्रमश्चास्ति । तत्र सकारात्मकस्वीकृत्या सह निषेधात्मक-पक्षस्योन्नयनाय गभीरा दृष्टिरप्यस्ति । समये समये विकासं प्राप्तस्य जीवनस्य सर्वाङ्गीणं विधानमपि तत्रास्ति । तदेव शास्त्रमित्यभिधीयते, शासकत्वाद्धितोपदेष्टृत्वाच्च । शास्त्राणां पूज्यत्वे शिष्टजनसेवितत्वे च हितोपदेष्ट्रित्वमेव हेतुः । तथा चोक्तम् –

**प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**
**पुंसां येनोपदिश्येत तच्छास्त्रमिति कथ्यते ।।** इति।

नित्यपदेन वेदाः विवक्षिताः, कृतकपदेन च स्मृत्यादयः । तानि च शास्त्राणि मानवानां हेयमुपादेयञ्च कर्म उपदिशन्ति सन्ति सेव्यानि भवन्ति ।

**शास्त्राणां धर्ममूलकता**

धर्मस्य प्रतिपादकं शास्त्रं धर्मशास्त्रमिति वक्तुं शक्यते । धर्म एव मानवस्याभ्युदयं कर्त्तुं शक्नोति । अत एव वैशेषिकधर्मसूत्रे धर्मस्य लक्षणं प्रतिपादितमस्ति –

**यतोऽभ्युदयनिःश्रेयस्सिद्धिः स धर्मः ।**

धर्म एव मानवं धारयति रक्षति पालयति च । तदेव महाभारते

प्रतिपादितं महर्षिणा व्यासेन--

**धारणाद्धर्ममित्याहुः धर्मो धारयते प्रजाः ।**

**यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ।।**

तत्र धर्मविषये किं मानमिति जिज्ञासायामुच्यते । वेद एव धर्मस्य मूलम् । तद्यथा गौतमधर्मसूत्रे –

वेदो धर्ममूलम् । तद्विदां च स्मृतिशीले (१।१।२) । वसिष्ठ-धर्मसूत्रेऽपि एतदेवोक्तम् –

श्रुतिस्मृतिविहितो धर्मः । तदलाभे शिष्टाचारः प्रमाणम् । शिष्टः पुनरकामात्मा (१।४।६) –

आपस्तम्बसूत्रेऽपि कथितम् –

**धर्मज्ञसमयः प्रमाणं वेदाश्च** (१।१।१।२)

धर्मस्योपादानानि पञ्च वर्णितानि सन्ति । १. वेदाः, २. वेदानां परम्परा, ३. तेषां व्यवहारः, ४. साधूनामाचारः, ५. आत्मतुष्टिश्च । यथोक्तं मनुस्मृतौ –

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।**

**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।।** (मनु. २।३)

एतादृशीमेवोक्तिं प्रतिपादयति याज्ञवल्क्यस्मृतिरपि । यथा--

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**

**सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ।।**

(याज्ञ. १।७)

एतैः प्रमाणैर्ज्ञायते यद् धर्मस्य मूलोपादानानि वेदाः स्मृतयः परम्परागतशिष्टाचारश्चेति ।

**धर्मशास्त्रस्य प्रतिपाद्यम्**

मानवधर्मस्य प्रतिपादकं शास्त्रं धर्मशास्त्रमिति कथ्यते । तत्र राज्ञां प्रजानाञ्चाधिकारस्य कर्त्तव्यस्य नीतेः सदाचारस्य शासन-सम्बन्धिनियमानाञ्च वर्णनं प्राप्यते । स्मृतीनां निर्माणं तु मानवधर्मस्य

चरमोन्नतेः निदर्शनमस्ति। श्रुत्या यथा वेदब्राह्मणारण्यकोपनिषदादिग्रन्थानां बोधो भवति तथैव स्मृत्या षड्वेदाङ्गानां धर्मशास्त्राणामितिहास-पुराणानामर्थशास्त्राणां नीतिशास्त्राणाञ्चावगतिर्भवति। ग्रन्थकाराः स्मृतिं धर्मशास्त्रस्य पर्यायवाचकत्वेन स्वीकुर्वन्ति। यथा मनुरप्याह –

**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।** (मनु. २।१०)

**धर्मशास्त्रग्रन्थानां निर्माणकालः**

धर्मसम्बन्धिग्रन्थानां तत्सम्बन्धिनिबन्धानां च प्रणयनं कदाऽभवदिति प्रश्नो महत्त्वमादधाति। किन्त्वस्योत्तरमिदमित्थंरूपेण वक्तुं नैव शक्यते। निरुक्तेन (३।४।५) ज्ञायते यत् प्राचीनकालेऽपि रिक्थाधिकार(वशीयत)-मुद्दिश्य वादः प्रावर्तत। तत्र रिक्थस्य विषये एकस्य पद्यस्योद्धरणं दत्तं यास्केन। यास्कः पद्यमात्रं कथयति न तु ऋचम्। यथा--

"तदेतच्छ्लोकाभ्यामभ्यूक्तम्। अङ्गादङ्गात्सम्भवसि स जीव शरदः शतम्।

**अविशेषेण पुत्राणां दायो भवति धर्मतः।**

**मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्**"॥ इति।

(निरुक्ते, ३।४।५)

एतेन ज्ञायते यद् धर्मसम्बन्धिग्रन्थाः श्लोकछन्दःस्वनुष्टुबादिपद्येषु वा प्रणीताः आसन्। यदि धर्मसम्बन्धिविषयाणां ग्रन्था यास्कात् पूर्वमप्यासन् तदा धर्मशास्त्रीयग्रन्थानां निर्माणकालः अतीव प्राचीनः स्यात्। गौतमस्य बौधायनस्यापस्तम्बस्य च धर्मसूत्राणि ख्रीष्ट-पूर्वषट्शताब्दीतः त्रिशताब्दीमध्ये निर्मितानि भवेयुरिति निश्चप्रचम्। गौतमेन धर्मशास्त्रस्य चर्चा कृता। बौधायनेनापि (४।५।९) **'धर्मशास्त्र'**-शब्दस्य प्रयोगः कृतः। तेन कात्य-काश्यप-गौतम-मौद्गल्य-हारीतादीनां धर्मशास्त्रकाराणां नामान्युल्लिखितानि। आपस्तम्बेनापि कण्व-कौत्स-हारीतादीनामृषीणां नामानि स्मृतानि। धर्मशास्त्रे लिखितस्य शूद्रकर्तव्यस्य सङ्केतः महर्षिणा जैमिनिना कृतः। यथा--

शूद्रश्च धर्मशास्त्रत्वात्। पूर्वमीमांसासूत्रे (६।७।६)। महर्षिणा पतञ्जलिनापि लिखितं यत्तस्मिन् समये धर्मशास्त्राण्यासन्, तेषां प्रमाणमीश्वरस्यादेशवन् महत्वपूर्णं मन्यते। यथा --

"नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्ति, अपवादैरुत्सर्गाः बाध्यन्तामिति"। (म. भा. पृ. ११५, ३६५)।

एतेनावबुध्यते यद् यास्कात् पूर्वमपि धर्मशास्त्राण्यासन्। ईसवीयपूर्वं षट्शताब्दीतः त्रिशताब्दीपूर्वं यावत् तेषां विद्यमानत्वे नास्ति सन्देहः। यास्कस्तु स्वसमयमेव मानवाचारस्य कृते सर्वश्रेष्ठं प्रमाणमिति मेने।

**धर्मशास्त्रस्य परम्परा**

धर्मशास्त्रस्य परम्परा अतीव प्राचीना। तस्य मूलं वेद एव। वैदिकसाहित्यं विपुलं दुर्गमं सरहस्यं विधिं बोधगम्यं विधातुं तत्त्वचिन्तकैः महर्षिभिः कल्पसूत्राणां निर्माणं कृतम्। येन वेदोक्तविधीनां कण्ठस्थीकरणे सौकर्यं समभवत्। कल्पसूत्राणां प्रधानतया विभागत्रयं विद्यते–श्रौतसूत्राणि, गृह्यसूत्राणि धर्मसूत्राणि च। कर्मनिष्ठहिन्दूनां कृते कल्पसूत्राणामतीव महत्त्वं विद्यते।

**श्रौतसूत्राणि**

वैदिकसंहितासु वर्णितानां यज्ञादिविधानानां सारः तत्र सङ्कलितोऽस्ति। श्रौतसूत्राणां प्रतिपाद्यं सामयज्ञादिसम्बन्धिधार्मिकानुष्ठानमस्ति। प्रधानतया निम्नाङ्किताः सूत्रकाराः सन्ति। यथा - आश्वलायनः, शाङ्खायनः, मनुः, बौधायनः, आपस्तम्बः, हिरण्यकेशी, कात्यायनः, लाट्यायनः, द्राह्यायणः, जैमिनिः, वैतानश्च।

**गृह्यसूत्राणि**

श्रौतसूत्रानन्तरं गृह्यसूत्राणां स्थानं वर्तते। गृह्यसूत्रेषु गार्हस्थ्य-जीवनविषयकधार्मिकविधीनां वर्णनमस्ति। तत्र गृहस्थजीवनसम्बन्धिनां गर्भाधानात् मृत्युपर्यन्तानां सर्वेषां संस्काराणामनुष्ठानस्य विधानं सविस्तरं

वर्णितमस्ति । प्रधानतया गृह्यसूत्रकाराः इमे सन्ति – आश्वलायनः, शाङ्खायनः, मनुः, बौधायनः, आपस्तम्बः, हिरण्यकेशी, भारद्वाजः, पारस्करः, द्राह्यायणः, गोभिलः, खादिरः, कौशिकश्च ।

**धर्मसूत्राणि**

वैयक्तिकस्य पारिवारिकस्य च जीवने पवित्रताया आध्यात्मिकस्य चाभ्युन्नत्यै यथा धार्मिकानुष्ठानानां गृह्यसूत्रेषु विधानं कृतं महर्षिभिः तथा धर्मसूत्रेषु सामाजिकजीवनस्य मानवकर्तव्यमभिलक्ष्य दृष्टिनिक्षेपः कृतः । धर्मसूत्रेषु पारलौकिकानां सामाजिकानां नैतिकानां क्रियाकलापानामपि प्रतिपादनं वर्तते । तत्र सामाजिकस्याचारविचारयोः वर्णाश्रमधर्मस्य च विस्तृता मीमांसा कृता तत्त्वविद्भिर्महर्षिभिः । तत्र खाद्याखाद्ययोः स्पृश्यास्पृश्ययोश्च सूक्ष्मदृष्ट्या विवेको विहितः । धर्मसूत्रेषु राज्यव्यवस्थायाः दण्डव्यवस्थायाश्च वर्णनमुपलभ्यते । तेन ज्ञायते यत् शासनव्यवस्था प्रजानां कल्याणायैवासीत् । प्रधानतया धर्मसूत्राणां नामानीमानि सन्ति– वसिष्ठधर्मसूत्रम्, मानवधर्मसूत्रम्, बौधायनधर्मसूत्रम्, आपस्तम्बधर्मसूत्रम्, गौतमधर्मसूत्रञ्च ।

सङ्क्षेपेण वक्तुं शक्यते यद् भारतीयजनजीवने आचारविचार-सम्बन्धिसंस्काराणां परम्परातिप्राचीनास्ति । वैदिकसंहितानामेकः भागः धर्मकर्माचारविचारविषयकनीतीनां प्रतिपादनं करोति । ब्राह्मणग्रन्थेषु धर्मकर्मसम्बन्धिसूक्ष्मानुशीलनं परिशीलनं च वर्तते । कल्पसूत्राण्यपि स्वकीयप्रमाणिकैः विधानैर्ब्राह्मणकालिकाभ्युपगतमतानामेव समर्थनं विदधाति ।

**स्मृतयः**

अस्माकं स्मृतयोऽस्याः सुदीर्घकालिकपरम्परायाः क्रमबद्धाः शृङ्खलाः सन्ति । भारतीयजीवनस्य सुदीर्घकालिकनियमानां क्रमबद्धरूपेण सङ्कलनं स्मृतयः चक्रुः । भारतस्य धार्मिकेतिवृत्ते सामाजिकस्य परिवारस्य चैकतायै भारतीयस्मृतिभिः यादृशं सुमहत्सदाचारपद्धतीनामुच्चतमनियमानां च निदर्शनमुपस्थापितम्, नाभूद् विश्वस्य समग्रेऽपीतिहासे प्राचीनकाले

एतादृशानां नियमानां निर्माणमिति। स्मृतयो वर्णाश्रमधर्माणां कर्त्तव्या-कर्त्तव्यपद्धतीनां विचारपूर्वकं राजधर्माणामपि मीमांसाञ्चक्रुः ।

अष्टादशपुराणानामिव स्मृतीनामपि संख्या अष्टादश मन्यते । वीरमित्रोदये अष्टादशानां मुख्यस्मृतीनामष्टादशानामुपस्मृतीनामन्येषामेक-विंशति स्मृतिकाराणां च नामोल्लेखः प्राप्यते । तत्राष्टादशः मुख्यस्मृतिकाराः इमे सन्ति – १. मनुः, बृहस्पतिः, ३. दक्षः, ४. गौतमः, ५. यमः, ६. अङ्गिरा, ७. योगेश्वरः, ८. प्रचेता, ९. शातातपः, १०. पराशरः, ११. संवर्तः, १२. उशना, १३. शङ्खः, १४. लिखितः, १५. अत्रिः, १६. विष्णुः, १७. आपस्तम्बः, १८. हारीतश्च ।

अष्टादशानामुपस्मृतीनां निर्मातारः सन्ति । तेषां नामानि लिखितानि वीरमित्रोदये --

**नारदः पुलहो गार्ग्यः पुलस्त्यः शौनकः क्रतुः ।**
**बौधायनो जातुकर्णो विश्वामित्रः पितामहः ।।**
**जाबालिर्नाचिकेताश्च स्कन्दो लौगाक्षिकश्यपौ ।**
**व्यासः सनत्कुमारश्च शान्तनुर्जनकस्तथा ।।**
**व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः ।**
**बौधायनश्च काणादो विश्वामित्रस्तथैव च ।।**
**पैठानसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ।।**

(वीर० परिभाषाप्रकरणे, पृ. १८)

अन्येषामेकविंशतिस्मृतिकाराणामपि तत्र नामोल्लेखः विद्यते। तद्यथा--

**वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः ।**
**विष्णुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः ।।**
**जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः ।**
**आत्रेयश्च गवेयश्च मरीचिर्वत्स एव च ।।**
**पारस्करश्चर्ष्यशृङ्गो वैजवापस्तथैव च ।**
**इत्येते स्मृतिकर्तारः एकविंशतिरीरिताः ।।**

(वीर. परि. प्र., पृ. १८)

**टीकाग्रन्थाः**

मनुस्मृतेः विषयविवेचने वैदिकपद्धत्याः दार्शनिकविचारस्य च समावेशोऽस्ति। तस्मादियं स्मृतिः प्रौढपाण्डित्यस्य परिचायिकाऽस्ति। तस्मादर्थबोधनाय सरलीकरणाय च टीकाग्रन्थानामपि निर्माणमभवत्। तत्र मेधातिथेः (८२५-९०० ई०) कुल्लूकभट्टस्य (द्वादशशताब्दी) च द्वे टीके प्रधानतया प्रामाणिकतया च समुपलभ्येते। याज्ञवल्क्यस्मृतावपि अनेकाः टीकाः लिखिताः। तासु विश्वरूपस्य (८००-८२५ ई०) **'बालक्रीडा'** कल्याणस्थस्य चालुक्यवंशीयस्य राज्ञः विक्रमादित्यषष्ठस्य निरीक्षणे विंशत्यधिकैकादशेशवीयवत्सरे विज्ञानेश्वरस्य **'मिताक्षरा'**, अपरार्कस्य (द्वादशशताब्द्यां) **'अपरार्कयाज्ञवल्कीयधर्मशास्त्रनिबन्धः'** चेति प्रमुखाः टीकाः सन्ति। उक्तासु टीकासु मिताक्षरा प्रामुख्येन प्रचलितास्ति। इयं मौलिकग्रन्थस्य महत्तां दधाति। तदुपरि नागेशभट्टस्य शिष्येण वैद्यनाथपायगुण्डेमहोदयस्य (अष्टादशशताब्द्यां) पुत्रेण बालकृष्णभट्टेन **'लक्ष्मीव्याख्यानं'** **'बालभट्टी'** वोपटीका प्रणीता।

**निबन्धाः**

स्मृतिग्रन्थानां तदुपरि टीकोपटीकाग्रन्थानां निर्माणस्य परम्परा सप्तदशशताब्दीं यावत् प्राचलत्। ऐतिह्यविद्भिः द्विपञ्चाशदधिकैकशतं स्मृतीनां संख्या मन्यते। 'श्रुतयो विभिन्ना स्मृतयो विभिन्ना नैको मुनिर्यस्य वचो न भिन्नम्' इत्युररीकृत्य सुगमतया बोधाय सरलीकरणाय च समीक्षात्मकशैल्या तत्त्वचिन्तकैः विद्वन्मनीषिभिः गवेषणापूर्णनिबन्धानां प्रणयनं कृतम्। तस्मिन् क्रमे द्वादशशताब्द्यां जीमूतवाहनेन धर्मरत्नमित्याख्यो निबन्धो व्यलेखि। तस्यामेव शताब्द्यां लक्ष्मीधरेण **'स्मृतिकल्पतरुः'** हलायुधेन च **'ब्राह्मणसर्वस्वम्'** बङ्गप्रदेशस्य राज्ञ लक्ष्मणसेनस्य कृते अलिख्यताम्। त्रयोदशशताब्द्यां रेवणभट्टेन **'स्मृतिचन्द्रिका'** वरदराजेन **'स्मृतिसङ्ग्रहः'** हेमाद्रिणा च **'चतुर्वर्गचिन्तामणिः'** निबन्धग्रन्थाः प्रणीताः। चतुर्दशशताब्द्यां विश्वेश्वरेण ''**मदनपारिजातः'** चण्डेश्वरेण **'स्मृतिरत्नाकरः'**

माधवेन च **'कालमाधवीयः'** इति निबन्धाः प्रणीताः । तस्मिन्नेव क्रमे पञ्चदशशताब्द्यां वाचस्पतिना **'चिन्तामणिः'** षोडशशताब्द्यां प्रतापरुद्रदेवेन **'सरस्वतीविलासः'** रघुनन्दनेन **'अग्निपरीक्षा'** वैद्यनाथदीक्षितेन **'स्मृतिमुक्ताफलम्'** चेति निबन्धरत्नानि विरचितानि । सप्तदशशताब्द्यां भट्टोजिदीक्षितेन **'तिथिनिर्णयः'** कमलाकरभट्टेन **'निर्णयसिन्धुः'** नीलकण्ठेन **'भागवन्तभास्करः'** मित्रमिश्रेण **'वीरमित्रोदयः'** चेति ग्रन्थाः निर्मिताः। अष्टादशशताब्द्यां नारायणात्मजेन त्र्यम्बकेणापि **'आचारेन्दुः' 'आचारभूषणम्'** चेति ग्रन्थद्वयं विरचितम् । आभिः ग्रन्थपरम्पराभिर्ज्ञायते यद्धर्म-शास्त्रविषयकग्रन्थानां निर्माणस्य परम्परा अक्षुण्णा विस्तृता चास्ति ।

**धर्मशास्त्रस्य विभागः**

प्रतिपाद्यविषयदृष्ट्या धर्मशास्त्रग्रन्थानां चत्वारो भेदाः कर्त्तुं शक्यन्ते। तद्यथा - १. आचारविषयकः, २. व्यवहारविषयकः, ३. कर्मफलविषयकः, ४. प्रायश्चित्तविषयकश्चेति । ब्राह्मणक्षत्रियवैश्यशूद्राणां चतुर्वर्णानां ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासिनां चतुराश्रमाणां सम्यक्रूपेण निर्वाहाय विधीनां विशदं विश्लेषणमपि धर्मशास्त्रग्रन्थानां प्रतिपाद्यविषय-त्वेनोल्लिखितमास्ति । सामाजिकव्यवस्थाविधीनां राजधर्माणां शासनसम्बन्धिनिर्देशानां विचारः यया सूक्ष्मदृष्ट्यात्राभवत्, तत्तु आश्चर्य-करमेव । मनुस्मृतिः याज्ञवल्क्यस्मृतिश्चेति द्वौ ग्रन्थौ एतादृशौ स्तः ययोः महत्त्वं सम्पूर्णे भारते समानरूपेणास्ति । संसारस्य संविधानानां तुलनायां भारतीयसंविधानस्य बृहद्रूपेण निर्माणस्याधारभूतावपि इमौ स्मृतिग्रन्थावेव स्तः ।

**आचारेन्दुः**

धर्मशास्त्रस्येतिहासे **'माटे'** इत्युपनामकनारायणात्मजेन **त्र्यम्बकेण** विरचितः **'आचारेन्दुः'** आचारप्रतिपादकः ग्रन्थः विराजतेतराम् । ग्रन्थेऽस्मिन् शताधिकानां स्मृतिकाराणां मतानि प्रमाणरूपेणोपस्थाप्य बुधजनमनः-कञ्जविकासायेन्दुमिव ग्रन्थममुमाचारेन्दुं षष्ट्यधिकसप्तदशशकाब्दस्य

कार्तिकमासस्य शुक्लपक्षस्याष्टम्यां तिथौ सम्पूर्णरूपेण निबबन्ध त्र्यम्बकाचार्यः, यथा स्वयमेव ग्रन्थकारः त्र्यम्बकः ग्रन्थस्योपसंहारे सुष्ठूक्तवान् –

**शके षष्ट्यत्यष्टौ १७६० तिथिमितदिने कार्तिकसिते**
**सुपूर्णोऽयं चेन्दुर्बुधजनमनःकञ्जविकसः ।**
**कलङ्कोऽपीष्टां तां रसिकमुदमाधातुमसकृ-**
**च्चकास्ताद्राधेशेष्टशिवधृतपूर्णेन्दुरिव यः ।।**

(आचारे. पृ. ४५६)

यद्यप्यत्र दैनिकजीवनस्य, समाचारस्य वर्णनं सम्यक्तया विशदेन मतमतान्तरपूर्वकं स्मृतिवचनानामुपस्थापनपुरस्सरं कृतवान्, तथापि स्वकीयं निरहङ्कारत्वं द्योतनायाकथयद्यत् - सुपूर्णश्चन्द्रः कञ्जविकासाय भवति किन्तु कलकाङ्कोऽयमाचारेन्दुः बुधजनमनःकञ्जविकासाय कथं स्यात्, रसिकस्य मुदमाधातुमलम् । पुनरपि दययैकार्द्रमनसः बुधजनवरा इमं ग्रन्थं सदा पश्यत, मदीयान् दोषान् चिनुत, यतो हि यूयं सर्वोपकृतिधृतदेहाः स्थ । पश्यन्तु तदीयं वचनम् –

**इमं ग्रन्थं भूयो बुधजनवराः पश्यत सदा**
**मदीयान्दोषान् वै चिनुत दययैकार्द्रमनसः ।**
**यतो यूयं सर्वोपकृतिधृतदेहाः स्थ च ततो**
**ममेयं विज्ञप्तिर्भवतु सफला सर्वसुखदा ।।**

(आचारे. पृ. ४५६)

माटे इत्युपनामकस्त्र्यम्बकः शाहाजिवर्मनृपतेः प्रेरणया बुधशिष्ट-जनानामाचिचरिषुः समाचारशिक्षणपरं नवलघुग्रन्थः रचनायोत्सुकोऽभूत्। शाण्डिल्यकुलसम्भवोऽयं विदुषो गुरोस्तातोपाह्वादुपगतरहस्यो विविधमत-निर्णायकं ग्रन्थममुं विरचितवान् । स्वकल्पं तद्वृत्तिं प्रतनपरिशिष्टादिपदशः विमृश्य सतीर्थ्याद्बल्लालात् समधिगतसहायकभरः पूर्वाचार्याणां मतमनुसरन्

विमलमतिदृक्तापोपनोदायेममाचारेन्दुमतनोत्।

यद्यपि महाशैवस्य शाहाजिनृपस्याश्रितश्चासीत् तथापि जनोऽयं वैष्णवः प्रतिभाति वारं वारं विष्णुं, महालक्ष्मीं जनकजाजानिं रामचन्द्रं जानकीशानमभिवादयति । प्रथमं महालक्ष्मीं नत्वा ग्रन्थं तनोति । अवलोकयन्तु तावत् –

**सतीर्थ्याद्विल्ललात्समधिगतसाहायकभरो**
**गणेशं विघ्नौघद्विषमवनिजाजानिमसकृत् ।**
**महालक्ष्मीं नत्वा गुरुजनपदे त्र्यम्बक इमं**
**तनोत्याचारेन्दुं विमलमतिदृक्तापहतये ।।**

(आचारेन्दौ, श्लो. ७)

ग्रन्थस्यान्तेऽपि कर्मपूर्तिविधायकस्य सीतापतेः रामचन्द्रस्यैव स्मरणं चकार । यथा –

**अनेन ग्रन्थनेनैव श्रीमान् रघुपतिः स्वयम् ।**
**प्रीणातु जानकीशानः कर्मपूर्तिविधायकः ।।**

**त्र्यम्बकस्य प्रादुर्भावकालः**

शाण्डिल्यकुलसम्भवस्य माटे इत्युपनामकस्य नारायणात्मजस्य श्रीत्र्यम्बकस्य प्रादुर्भावः शकसंवत्सरस्य अष्टादशशताब्द्यामभवत् । सप्तदशशताब्द्यां प्रादुर्भूतस्य निर्णयसिन्धुकारस्य कमलाकरभट्टस्य वीरमित्रोदयकारस्य मित्रमिश्रस्योल्लेखः कृतः स्वकीये ग्रन्थे आचारेन्दौ । तेन स्वयमपि लिखितं यदाचारेन्दुः ग्रन्थः षष्ट्यधिकसप्तदशशकाब्दस्य कार्तिकमासस्य शुक्लपक्षस्याष्टम्यां तिथौ पूर्णतामगात् (आचारे. पृ. ४५६) ।

**त्र्यम्बकस्य व्यक्तित्वम्**

माटे इत्युपाह्वः श्रीत्र्यम्बकः धर्मशास्त्रस्य ज्ञातासीत् । स तु कुशाग्रबुद्धिः काव्यनिर्माणदक्षः शास्त्रज्ञश्चासीत् । तस्य कुशाग्र-बुद्धितामवलोक्यैव विविधमतनिर्णायिकमाचारप्रतिपादकं ग्रन्थं निर्मातुं

तमादिदेश तदाश्रयदाता नृपतिः नरसिंहः । यथा तेनैवोक्तम् –

**स्वशाखीयासन्नं विविधमतनिर्णायकममुं**

**कुरुध्वं ग्रन्थं चेत्यखिलगुरुविप्रानुमतितः।**

**कुशाग्रेक्षावन्तं विमलकुलनारायणसुतं**

**समभ्यर्च्यावोचत्तनितुमनसं त्र्यम्बकमयम् ।।** (आचारे. श्लो. ५)

आचारेन्दुग्रन्थस्यारम्भे चावसाने विविधवृत्तेषु निर्मिताः भावभरिताः श्लोकाः तस्य काव्यनिर्माणदक्षतां प्रमाणयन्ति । त्र्यम्बकमहानुभावः महान् वैयाकरणोऽपि प्रतिभाति । स तु तत्राचारेन्दुग्रन्थे नैकस्थले व्याकरणसम्बन्धिगूढचर्चामपि कृतवान् । यथा–

**शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः।**

तृतीयार्थे तसिः । अन्तेन तालुना स्पृष्टाभिरित्यर्थः ।

(पृ. ३६-३७)

अर्थनिर्धारणे पाणिनेः स्मरणं स्थले स्थले कृतवान् । यथा– ''आनक्षत्रदर्शनादामण्डलदर्शनादित्युभयत्राऽऽङ् वर्तते तस्याऽऽङ्-मर्यादाभिविध्योरिति पाणिनिस्मरणादुभयार्थत्वेऽपि प्रकृते मर्यादार्थत्वमेव तेन सहेत्यभिविधिः, तेन विना मर्यादा, अभिविध्यर्थकत्व आसायमाप्रातश्च जपप्रसङ्गात् (पृ. १०६) ।

अभिवादनक्रमे तेन सूक्ष्मविचारः कृतः । यथा – अमुकप्रवरान्वितामुकगोत्रोऽमुकशर्माऽहं भो अभिवादय इत्युक्त्वा.....शिरोऽवनमनमिति। अभिवादयामीति परस्मैपदं केचित्कुर्वति तदुपेक्ष्यं कर्तृगामिक्रियाफले आत्मनेपदस्यैव वक्तव्यत्वात् । एतादृक्विचारः तस्य व्याकरणाभिज्ञतां पुष्पाति ।

तस्य न्यायशास्त्रवेतृताऽपि प्रमाणिता भवति । तेन नैकेषु स्थलेषु विविधन्यायाः समुद्धताः, यथा – सर्वशाखाप्रत्ययमेकं कर्मेति न्यायेन (पृ. ५) तुल्यन्यायात् (पृ. ११) यवागुपाकन्यायेन (पृ. २१)

पुराण-वाक्यानां समुद्धरणेन तस्य पुराणाभिज्ञता स्वतः सिद्धा ।

**कृतित्वम्**

माटे इत्युपनामकेन नारायणात्मजेन त्र्यम्बकशर्मणा विरचितः एक एव ग्रन्थः आचारेन्दु इत्यस्ति। चन्द्रसमुद्रवाजिधरणिसंख्ये १७४१ शकाब्दे त्र्यम्बकशर्मणा विरचितः आचारभूषणमिति नामकः समुपलभ्यते एकोऽन्यः ग्रन्थः । किन्तु स तु अन्य इव प्रतिभाति। लेखकविभाजका युक्तयः काश्चिदत्र तालिकयो समुद्धृयते । तद्यथा –

**तालिका**

| आचारेन्दुः | आचारभूषणम् |
|---|---|
| १. अस्य लेखकः स्वकीयं शाण्डिल्यकुलसम्भवं मन्यते । | १. स तु आत्मानं वासिष्ठकुलजं कथयति । |
| २. अयं माटे इत्युपाह्वोऽस्ति । | २. स तु ओकोपाह्वोऽस्ति । |
| ३. अस्य लेखकः पितुर्नाम नारायणोऽस्ति । | ३. स तु स्वकीयस्य पितुर्नाम श्रीरामार्यशर्मा इति घोषयति । |
| ४. अयमात्मानमाश्वलायन-शाखीयं मन्यते । | ४. अयं त्वात्मानं हिरण्यकेशीय-माकलयति । |
| ५. अयमात्मानं शाहुपुरस्थस्य नरहरेः राज्ञः प्रधानपण्डितः उद्घोषयति । | ५. अस्य लेखकस्य पिता प्रत्यक्-सिन्धोः निकटस्थस्य मिलन इति लघुग्रामस्य वास्तव्यः आसीत्। सुखं वस्तुं परिजनैः सह नासिकपुरे चागात् । |
| ६. अस्य ग्रन्थस्यान्ते पुष्पिकायां लिखितमस्ति – इति माटे इत्युपनामकनारायणात्मज-त्र्यम्बकविरचित आचारेन्दुः समाप्तः । | ६. अत्र तु इत्योकोपाह्वश्रीमद्वा-सिष्ठकुलावतंसश्रीरामार्य-सूनुना त्र्यम्बकशर्मणा सङ्-गृहीते सत्याषाढापराभिधा-हिरण्यकेश्याह्निकात्मकाचार-भूषणे नवमकिरणस्तदुत्तरार्ध-स्तथाऽसौ प्रबन्धः सम्पूर्णः । |

**ग्रन्थस्य प्रतिपाद्यविषयः**

ग्रन्थस्य नाम्नैव ज्ञायते यदयमाचारप्रतिपादकोऽस्ति । यथास्य व्युत्पत्तिरपि कर्त्तुं शक्यते- 'इदि दीप्तौ' धातोः इन्दति दीप्यते दीपयति वेति इन्दुः, आचारस्येन्दुः आचारेन्दुः, आचारस्य प्रकाशक इत्यर्थः । श्रीनारायणात्मजः श्रीत्र्यम्बकशर्मा विविधमतनिर्णायकं स्वाश्वलायनशाखीयाचार-प्रतिपादकमखिलगुरुविप्रानुमोदितं प्रतनपरिशिष्टादिसमर्थितं स्वकल्पं तद्वृत्तिं च विमृश्य बुधशिष्टजनाचारयोग्यं विमलमतिदृक्तापहतये तनोत्याचारेन्दुम्। अस्मिन् ग्रन्थेऽष्टधा विभक्तस्य दिनस्य कृत्यं श्रुतिस्मृतिधर्मशास्त्रवचन-समुद्धरणपूर्वकं प्रतिपादितवान् । तत्र प्रथममाचारस्य प्रशंसायां पराशरस्य वचनं समुद्धरति । यथा–

**अचारमूलं श्रुतिशास्त्रतत्त्वमाचारशाखास्तु तदुक्तकृत्यम् ।**
**आचारपर्णानि च यज्ञयोगा आचारपुष्पाणि यशोधनानि ।।**
**आचारवृक्षस्य फलं हि नाकस्तस्मात्सुखस्वादुरसश्च मुक्तिः ।**
**तस्मादनन्तं फलदं तु तत्त्वमाचारमेवाथ श्रयेत्प्रयत्नात् ।।** इति ।

सतामाचारः सदाचारः कथ्यते । तत्र के सन्तः इति जिज्ञासायां हारीतस्य वचनं समुपस्थापयति --

**साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ।**
**तेषामाचरणं यत्तु स सदाचार उच्यते ।।**

तत्र शिष्टाः सन्तः कथ्यन्ते । तेषां स्वरूपमाह बौधायनः– शिष्टाः खलु गतमत्सराः निरहङ्काराः कुम्भीधान्या अलोलुपादम्भदर्पलोभमोहक्रोध-वर्जिताः ।

"यद्यपि सिद्धं लोकविरुद्धं मा करणीयं मा करणीयम्" इत्युक्त्याः समर्थने लौकिकाचारस्याप्यावश्यकत्वं समर्थयति त्र्यम्बकाचार्यः स्मृत्यन्तरस्य वचनेन --

**यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ।**
**तथाऽपि लौकिकाचारं मनसाऽपि न लङ्घयेत् ।।**

धर्मस्य मूलं प्रमाणं किमिति शङ्कायां याज्ञवल्क्यस्य वचनं प्रस्तौति । तद्यथा धर्ममूलमाह याज्ञवल्क्यः--

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**
**सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ।।** इति।

एतेषां विरोधे पूर्वपूर्वबलीयस्त्वमिति । तथा च सङ्ग्रहे --

**श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् ।**
**पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो विदुः ।।** इति।

स्मृत्याचारयोर्विरोधे स्मृतिरेव बलवती । यथा श्रुतिस्मृत्योर्विरोधे श्रुतिः । इदानीन्तनाचारेण स्मृतिः, स्मृत्या च श्रुतिः कल्पनीयेत्याचारस्य ह्यन्तरितप्रामाण्येन प्रत्यक्षानुमानयोर्विरोधेऽनुमानस्यैव बहिरङ्गत्वेन दुर्बलत्वात् । अनेन प्रकारेण सविस्तरं धर्मप्रामाण्यं निर्धारयति ग्रन्थकारः । एवमुपोद्घातप्रकरणे आचारप्रशंसा कर्मार्हस्थानलक्षणं कर्मणः त्रैविध्यं वर्णयति । नित्यकर्मप्रकरणे प्रबोधविधिं मूत्रपुरीषोत्सर्गविधिं शौचविधिमाचमनविधिं दन्तधावनविधिं केशप्रशाधनविधिं कुशग्रहणकालादिकं हेमादिपवित्रप्रकरणं स्नानविधिं वस्त्रधारणविधिञ्च प्रतिपादयति । जीवत्पितृकस्य जीवज्ज्येष्ठभ्रातृकस्योत्तरीयधारणं निषिद्ध्यते । तदुक्तं स्मृतिसारे --

**उत्तरीयं योगपट्टं तर्जन्यां रौप्यधारणम् ।**
**न जीवत्पितृकः कुर्याज्ज्येष्ठो वा विद्यते यदि ।।**

तदनन्तरं तिलकधारणविधिं सन्ध्योपासनविधिं वर्णयति । तत्र जपार्थं शुचिदेशमप्याह । तत्र शङ्ख --

**गृहे त्वेकगुणं जाप्यं नद्यां तु द्विगुणं स्मृतम् ।**
**गवां गोष्ठे दशगुणमग्न्यागारे शताधिकम् ।।**
**सिद्धक्षेत्रेषु तीर्थेषु देवतानां च सन्निधौ ।**
**सहस्रशतकोटिनामनन्तं विष्णुसन्निधौ ।।** इति ।

तत्रासननिर्धारणे दर्भस्यासनं शस्तम् । तत्रापि विशेषमाह

व्यासः --

**कौशेयं कम्बलं चैव अजिनं पट्टमेव च ।**
**दारुजं तालपत्रं वा आसनं परिकल्पयेत् ।।**
**कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ।**
**वशाजिने व्याधिनाशः कम्बले दुःखमोचनम् ।।**
**अभिचारे नीलवर्णं रक्तं वश्यादिकर्मणि ।**
**शान्तिके कम्बलः प्रोक्तः सर्वेष्टं चित्रकम्बले ।।**

ततः नित्यौपासनविधिं होमादिविधिं च प्रतिपादयति । अथ प्रसङ्गात् होमप्रायश्चित्तानि समुपस्थापयति । तदनु सूर्यार्चनविधिं प्रतिपाद्य प्रसङ्गान्नैमित्तिकजपविधिरुच्यते । तद्यथा --

**अपमृत्युविनाशार्थं चतुर्वारमनुच्छ्वसन् ।**
**सावित्रीं प्रजपेन्नित्यं सहस्रं ध्यानतत्परः ।।**
**शतादप्यधिकायुः स्याज्जपेनानेन मानवः ।**
**श्रीमानरोगी विरजा विद्वान्पूज्यश्च बन्धुमान् ।।**

अस्मिन्नेव क्रमे नवार्णजपविधिं शिवपञ्चाक्षरविधानं च वर्णयति । अथ पुराणश्रवणं नित्यदानविधिं च प्रतिपादयति । प्रत्यहं प्रातःकाले पुराणश्रवणं करणीयं सर्वपापविमुक्तये । यथाह चिन्तामणौ --

**सर्वपापविनिर्मुक्तिकरणे यस्य मानसम् ।**
**वर्तते विधिवत्तेन पुराणं श्रूयते ध्रुवम् ।।**
**प्रातःकाले समुत्थाय दन्तधावनपूर्वकम् ।**
**कृताह्निकं समाहूय वक्तारं शीलकोविदम् ।**
**सम्भाव्याऽऽसनदानेन नमस्कुर्यात्समञ्जसा ।।**

अनेन प्रातर्होमोत्तरं पुराणं श्रोतव्यमिति लभ्यते । दक्षस्तु कालान्तरमाह --

**इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् ।।** इति।

सर्वपुराणेषु श्रीमद्भागवतमवश्यं नित्यं श्रोतव्यम् । तदुक्तं पद्म-

पुराणेऽम्बरीषं प्रति गौतमेन–

**अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृणु ।**
**पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम् ।।** इति।

अथ पुराणश्रवणप्रयोगविधिमपि वर्णयति । तदनन्तरं नित्यदानविधाने याज्ञवल्क्यादिमहर्षीणां वचनमुपस्थापयति । यथा स्मृतिरत्नावल्याम् –

**दातव्यं प्रत्यहं पात्रे स्वस्थः शक्त्यनुसारतः ।**
**गौरवं प्राप्यते दानान्न तु वित्तस्य सङ्ग्रहात् ।।**
**आयासतः प्रलब्धस्य प्राणेभ्योऽपि गरीयसः ।**
**गतिरेकैव वित्तस्य दानमण्वपि यत्नतः ।।**

महाभारते भीष्मो युधिष्ठिरं प्रत्याह –

**एकस्मिन्नप्यतिक्रान्ते दिने दानविवर्जिते ।**
**दस्युभिर्मुषितस्येव युक्तमाक्रन्दितुं भृशम् ।।**

तस्माद्विभवानुसारतः पूगीफलादिकमपि प्रत्यहं देयमिति तात्पर्यार्थः। अथ प्रातर्नित्यं ससुवर्णाज्यदानस्य विधिं प्रयोगञ्चाभिधत्ते । काँस्यपात्रस्थितघृते स्वकीयं रूपमवलोक्य ससुवर्णं घृतं दद्यात्, तेन सर्वविघ्नोपशान्तिर्भवति । यथोक्तं भविष्ये –

**कांस्यपात्रस्थिताज्ये च आत्मरूपं निरीक्ष्य च ।**
**ससुवर्णं द्विजो दद्यात्सर्वविघ्नोपशान्तये ।।**

दानस्य दिङ्निर्देशोऽपि महर्षिभिः कृतः येन ग्रहीतुरायुर्न क्षीयते दातुश्चायुर्वर्द्धते । यथा प्रयोगचिन्तामणौ –

**दद्यात्पूर्वमुखो दानं गृह्णीयादुत्तरामुखः ।**
**आयुर्विवर्धते दातुर्ग्रहीतुः क्षीयते न तत् ।।**

ततः देवपूजाविधिं तत्र समर्प्य वस्तुनि प्रयोगं चाभिदधाति । विष्णुपूजायां शङ्खोऽतिप्रशस्तः मन्यते । यथा स्कान्दे–

**पुरतो वासुदेवस्य सपुष्पं सजलाक्षतम् ।**
**शङ्खमभ्यर्चितं तिष्ठेत्तस्य लक्ष्मीर्न दुर्लभा ।।**

अथ पार्थिवलिङ्गपूजाप्रयोगं प्रतिपाद्य दानधर्मस्थशिवसहस्रनामसु मुख्यान्यष्ट नामानि प्रतिपादयति । तदनुक्रमः शिवपुराणे --

**शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ।**

**संसारवैद्यः सर्वज्ञः परमात्मेति मुख्यतः ।।**

**नामाष्टकमिदं तस्य प्रतिपादितमीशितुः ।।** इति ।

एतैरष्टनामभिः पूजाकाले विल्वपत्राण्यर्पयेत् ।

अथ पूजाधिकारिणः पुराणपूजां तुलसीपूजां मङ्गलदर्शनमपि प्रतिपादयति । तत्र तुलसीपूजा स्कान्दे--

**दृष्ट्वा स्पृष्ट्वाऽथ वा ध्याता कीर्तिता नमिता स्तुता ।**

**रोपिता सिञ्चिता नित्यं पूजिता तुलसी शुभा ।।**

तथा--

**धात्रीफलं च तुलसी मृत्तिका द्वारकोद्भवा ।**

**सफलं जीवितं तस्य त्रितयं यस्य वेश्मनि ।।**

अथ मङ्गलदर्शनान्याह मनुः--

**अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।**

**दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्सदा बुधः ।।**

अथाष्टधा विभक्तस्य दिनस्य द्वितीयतृतीयभागकृत्यं प्रतिपादयति ग्रन्थकारः । तत्र द्वितीयभागकृत्यं दक्षस्मृतौ--

**द्वितीये च तथा भागे वेदाभ्यासो विधीयते ।**

वेदाभ्यासः पञ्चधा, तदुक्तं षट्त्रिंशन्मते--

**वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।**

**तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।।**

अथ तृतीयभागकृत्यमभिधत्ते । तत्र दक्षवचनम्--

**तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ।**

पोष्यवर्गं स एवाऽऽह--

**माता पिता गुरुर्भार्या प्रजाहीनः समाश्रितः ।**

**अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ।।**

मनुरपि–

**वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः ।**
**अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ।।**

अथार्जितधनस्य विभागः कर्त्तव्यः । वित्तस्य भागपञ्चकं कृत्वा दुर्भिक्षादौ जीवनायापि संरक्षणीयः । यथोक्तं श्रीमद्भागवते–

**धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।**
**पञ्चधा विभजन् वित्तमिहामुत्र च मोदते ।।**

ततः ग्रन्थेऽस्मिन् दिनस्य चतुर्थभागस्य कृत्यं प्रतिपादयति माटे इत्युपाह्वस्त्र्यम्बकः । दिनस्य चतुर्थे भागे स्नानार्थं सविधिं मृदमाहृत्य तीर्थमेत्य त्रिधा विभज्यैकेन मूर्ध्न आनाभेरपरेण चाधस्तादात्मानमनुलिप्याप्स्वाप्लुत्य क्षालयित्वाऽऽदित्यं निरीक्ष्य तं ध्यायन् स्नायात् । एतन्मलस्नानमाहुः । भौमभानुवारादिनिषिद्धकालेषु मृदा न स्नायादिति । तद्यथा पारिजाते–

**नन्दायां भार्गवदिने कृत्तिकासु मघासु च ।**
**भरण्यां भानुवारे च गजच्छायाह्वये तथा ।।**
**अयनद्वितये चैव मन्वादिषु युगादिषु ।**
**मृदा स्नानं पिण्डदानं न कुर्यात्तिलतर्पणम् ।।**

तत्पश्चात् ब्रह्मयज्ञस्य विधानं वर्णयति । ततः मध्याह्नसन्ध्यायाः वर्णनमस्ति । यद्यप्याचार्यैर्गृह्ये मध्याह्नसन्ध्या नोक्ता, तथापि गृह्यपरिशिष्ट उक्तत्वात्–

**सन्ध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा ।**

इत्यनेन मध्याह्नसन्ध्याऽवश्यं कार्या । ततः मध्याह्नसन्ध्याप्रयोगमाह । अथाऽऽशौचे नित्यस्नानादिकर्त्तव्याकर्त्तव्यनिर्णयं प्रस्तौति । ततः ब्रह्मकूर्चविधिं प्राह । तत्र बौधायनसूत्रस्य वचनं प्रस्तौति । तद्यथा–

**ब्रह्मकूर्चं प्रवक्ष्यामि कायशोधनमुत्तमम् ।**
**शूद्राणां भाजने भुक्त्वा वेदानां विक्रये तथा ।।**

**होमातिक्रमकाले च पर्वहीनमसंस्कृतम् ।**
**एतेषां चैव शुद्ध्यर्थं पञ्चगव्यं प्रशस्यते ।।**

तदनन्तरं यज्ञोपवीतनिष्पत्तिप्रकारः तद्धारणविधिश्चाभिधत्ते । ततः यज्ञोपवीतनाशे प्रायश्चित्तविधिं मतान्तरपूर्वकं विदधाति ।

अथाष्टधा विभक्तस्य दिनस्य पञ्चमभागकृत्यं प्रतिपादयति । मध्याह्ने प्राप्ते बलिं कृत्वावशिष्टं भुञ्जीत । तत्र बलिवैश्वदेवविधिं प्रतिपाद्यातिथिभ्योऽन्नदानरूपं मनुष्ययज्ञं वर्णयति । अथ ब्रह्मयज्ञस्य दक्षिणारूपं भिक्षादानविधिं प्रतिपादयति । ततः नित्यश्राद्धविधिमपि कथयति । तत्पश्चाद्गोग्रासविधानमभिधायान्नदानफलं चोक्त्वा भोजन-विधिमभिधत्ते । तत्र जातिदुष्टानि क्रियादुष्टानि कालदुष्टानि संसर्गदुष्टान्य-भोज्यानि वर्णयति ग्रन्थकारः । एवमुक्तनिषिद्धद्रव्यं वर्जयित्वाऽवशिष्टेषु वैद्योक्तगुणतारतम्यं विचार्य शरीरस्य हितकरद्रव्यकृतान्नं भुञ्जीत । अन्यथा शरीरोपघातप्रसङ्गः । तत्र हितकृदन्नगुणान् विशिनष्टि । तदनु भोजनविधिं सविस्तरं प्रतिपादयति ।

अथ षष्ठसप्तमभागकृत्यमाह । तत्र दक्षस्य वचनं प्रस्तौति । यथा–

**भुक्त्वा च सुखमास्थाय तदन्नं परिणामयेत् ।**
**इतिहासपुराणाद्यैः षष्ठसप्तमको नयेत् ।।**

ततः अष्टमभागस्य कृत्यवर्णनपुरस्सरं सायंसन्ध्याकालं तद्विधिमग्निकार्यं द्वितीयभोजनं रात्रिभोजने निषिद्धानि, शयनविधिं सप्रमाणं सयुक्तिकं प्रतिपादयति ग्रन्थकारः । एवं सायमौपसनादिशयनान्तं रात्रिकृत्यं वर्णयित्वा ग्रन्थस्य सम्पूर्तिं करोति माटे इत्युपनामकः नारायणात्मजः श्रीमान्त्र्यम्बकः। यथा कलङ्काङ्कः सुपूर्णोऽयमिन्दुः बुधजनमनकञ्जविकसः भवति, तथैवायमाचारेन्दुरपि रसिकजनमुदमाधातुं भवेत् ।

**ग्रन्थस्येदं संस्करणम्**

ग्रन्थममुं सम्पाद्य भवतां समक्षमुपस्थापयन् हर्षातिरेकभरभरितो भवत्ययं जनः। यद्यपि पूर्वमपि ग्रन्थस्यास्य प्रकाशनमभवत् । तथापि

पाठान्तरपुरस्सरं समीक्षात्मकटिप्पण्या समलङ्कृतमिदं संस्करणं स्वकीयां नवीनतां द्योतयति । प्रारम्भे चैतिह्यप्रतिपादिका समीक्षात्मिका भूमिकाऽवश्यमेव धर्मशाास्त्राध्येतॄणां कृते साहयिका भविष्यतीति मे दृढो विश्वासः । समाचाराचरिष्णुनां कृतेऽपि ग्रन्थोऽयं महोपकारको भविष्यतीति ।

**कृतज्ञताज्ञप्तिः**

अथ येषामुपकारिणां महानुभावानां मान्यानां कृतज्ञोऽहं ग्रन्थमिमं सम्पादयन् तान् प्रति कृतज्ञतां प्रकटयामि । तेषु सर्वप्रथमं पूर्वकुलपतीनां विद्वद्धौरेयाणां प्राच्यप्रतीच्योभयविधशास्त्रपारङ्गतानां पण्डितवर्याणां **प्रो० विद्यानिवासमिश्र**महोदयानामाधमर्ण्यमावहामि येषां दत्तसम्पादनकार्यभरेण नमितो भूत्वा तत्पादपद्मपरागेण मम भालो धूलिधूसरितो भवति । न केवलं सम्पादनस्वीकृत्यापि तु ग्रन्थेऽस्मिन् स्वसम्मतिं प्रदाय चोपकृतोऽहं तैर्महानुभावैः । अतः परं वर्तमानकुलपतीनां वेदान्तादिशास्त्राम्भोधि-पारदृश्वनां सरलमृदुदयापूर्णहृदयानां माननीयानां **प्रो. राममूर्तिशर्म**महोदयानां कुलपतित्वे तदुपकारभरिते ग्रन्थोऽयं सम्पादनकार्यतः परिपूर्णतामगादिति तान् प्रति कृतज्ञतामावहन् नतमस्तको भवामि । तदनु तन्त्रसाधकानां श्रीविद्यासमुपासकानां पण्डित**श्रीसीतारामकविराजवर्याणां** चरणेषु प्रणतिपुष्पाञ्जलिं समर्पयामि यैर्मुहुर्मुहुः प्रेरितो भूत्वा ग्रन्थस्यास्य सम्पादनकार्येण लब्धमनोरथोऽभवम् । महामान्यानां विद्वद्वरेण्यानामनेकविध-महत्त्वशालिग्रन्थानां प्रकाशनसम्पत्तिभिः विश्वविद्यालयस्य संस्कृतिगौरवं समेधयतां प्रकाशननिदेशकानां **डॉ. हरिश्चन्द्रमणित्रिपाठि**महोदयाना-मुपकारं ध्यायं ध्यायं तान् प्रति कृतज्ञतां विनिवेदयामि प्रणमामि च । अतः परं सरलचित्तानां साहित्यादिशास्त्रनिष्णातबुद्धीनामुत्साह-श्रमपरायणानां सहायकसम्पादकानां **डॉ.ददन-उपाध्यायानां** कृतज्ञतां स्वीकरोमि । तैर्महानुभावैः कार्येऽस्मिन् महान् सहयोगः कृतः । अतः तेषामभ्युदयार्थं भगवन्तं विश्वनाथं प्रार्थयामि । ततः परमीक्ष्यशोधननिष्णातानां

विविधशास्त्रकुशाग्रबुद्धीनां **डॉ. हरिवंशकुमारपाण्डेया**नामुपकारमावहन् तेभ्योऽभ्युदयार्थं चिरायुष्कामः भगवन्तं विश्वनाथमभिनन्दयामि। अन्येषामपि **श्री-अशोककुमारशुक्ल-श्री-अतुलकुमारभाटियादि**महाशयानां प्रकाशनसंस्थानस्थितानां कर्मचारिणां कृते मङ्गलकामनया चिरायुष्यार्थं प्रार्थयामि सान्नपूर्णं विश्वेश्वरम् ।

ततः परं दुर्गाग्राफिक्ससञ्चालकानां श्रीमताम् **उदयकुमाराणां** कृतज्ञतां प्रकटयन् आशीर्वचोभिरभिनन्दयामि तैर्महता श्रमेण ग्रन्थस्यास्य सुस्पष्टं सुन्दरं मुद्रणं सम्पाद्य लोकानामस्माकञ्च महोपकारः कृतः ।

अन्ते सश्रद्धया सभक्त्या भवान्यन्नपूर्णाविश्वनाथयोश्चरणकमलेषु प्रणतिपरम्परापूर्वकं ग्रन्थमिमं समर्पयन् समाचारनिष्णातमतिभ्यो विद्वद्भ्यः प्रणामाञ्जलिं विधाय ग्रन्थलेखेषु त्रुटिक्षमार्थं सर्वान् प्रार्थयमानो विरतिं लभतेऽयं जनः विदुषां वशंवदः ।

**वाराणसी**
ज्येष्ठपूर्णिमा
२०५७ विक्रमाब्दः
१६ जून २०००
खीस्ताब्दः



**व्यासमिश्रः**
वरिष्ठप्राध्यापकोऽध्यक्षश्च
धर्मशास्त्रविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमः

**अथ प्रथमभागकृत्यम्**

**अथ द्वितीयभागकृत्यम्**



**अथ तृतीयभागकृत्यम्**

**अथ चतुर्थभागकृत्यम्**

**अथ पञ्चमभागकृत्यम्**

**अथ षष्ठसप्तमभागकृत्यम्**



**अथाष्टमभागकृत्यम्**

**अथ सायमौपासनम्**

●

ॐ तत्सद्ब्रह्मणे नमः

माटे इत्युपाह्वत्र्यम्बकविरचितः

# आचारेन्दुः

श्रीशाहुजी विजयते बुधसात्कृतश्रीः
शाहाजिवर्मनृपतिर्नृहरिप्रधानः।
यत्प्रापितार्थिमुदमेक्ष्य[1] निजाधिकां तां
पञ्चत्वमाप सुरभूरुडपि त्रपातः ॥ १॥

महाशैवः स श्रीशिवचरणपद्मभ्रमरित-
प्रचेतास्तन्निष्ठोऽर्चति गिरिशमब्जादिकुसुमैः।
यदर्चाद्रष्टाऽऽप्तद्युतल इव चाऽऽस्तेऽनिमिषतोऽ-
प्सरोगन्धर्वाढ्यः सपदि सुमनोमण्डलगतः ॥ २॥

तत्सेवाप्तमनोरथप्रतिकृतित्वं प्रापितोऽपि स्वयं
[2]नात्याक्षीन्निजपद्धतिं नरहरिः सेवैकबद्धादरः।
तत्स्वान्स्वान्मनुते हितं च तनुते तेषां यथावैभवं
विद्वन्मण्डलमण्डनं च कुरुते प्रेष्ठं प्रयच्छन् सदा ॥३॥

इत्थं तद्धुरमुद्वहन्नपि सदाचारं व्यवस्थापयन्
कीर्त्याऽऽहूतमिवार्थिसङ्घमचिरात्सम्मानयन् सादरम् ।
आचारं बुधशिष्टमाचिचरिषुर्नानार्थसङ्ग्राहकान्
ग्रन्थान् वीक्ष्य पुरातनान्नवलघुग्रन्थक्रियोत्कस्त्वभूत् ॥ ४॥

---

१. आ + ईक्ष + ल्यपि रूपम्।
२. मा त्याक्षीति पाठान्तरम्।

स्वशाखीयासन्नं विविधमतनिर्णायकममुं
कुरुध्वं ग्रन्थं चेत्यखिलगुरुविप्रानुमतितः।
कुशाग्रेक्षावन्तं विमलकुलनारायणसुतं
समभ्यर्च्यावोचत्तनितुमनसं त्र्यम्बकमयम् ॥ ५॥
ततस्तं तद्भावं मनसि विनिधाय प्रथमतः
स्वकल्पं तद्वृत्तिं प्रतनपरिशिष्टादिपदशः।
विमृश्याऽऽचार्याणां मतमनुसरन् शाण्डिलकुलो
गुरोस्तातोपाह्वादुपगतरहस्योऽत्र विदुषः ॥ ६॥
सतीर्थ्याद्बल्लालात्समधिगतसाहायकभरो
गणेशं विघ्नौघद्विषमवनिजाजानिमसकृत् ।
महालक्ष्मीं नत्वा गुरुजनपदे त्र्यम्बक इमं
तनोत्याचारेन्दुं[१] विमलमतिदृक्तापहतये ॥ ७॥

## अथाचारप्रशंसा

तत्राऽऽचारप्रशंसामाह पराशरः—

आचारमूलं श्रुतिशास्त्रतत्त्वमाचारशाखास्तु तदुक्तकृत्यम् ।
आचारपर्णानि च यज्ञयोगा आचारपुष्पाणि यशोधनानि ॥ १॥
आचारवृक्षस्य फलं हि नाकस्तस्मात्सुखस्वादुरसश्च मुक्तिः ।
तस्मादनन्तं फलदं तु तत्त्वमाचारमेवाथ श्रयेत्प्रयत्नात् ॥ २॥ इति।

तत्राऽऽचारलक्षणमानुशासनिके पर्वणि—

आचारलक्षणो धर्मः सन्तश्चाऽऽचारलक्षणाः ।
साधूनां च यथावृत्तमेतदाचारलक्षणम् ॥ इति ।

हारीतोऽपि—

साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु स सदाचार उच्यते ॥

---

१. इदि दीप्ताविति धातोः इन्दति दीप्यत इति, इन्दुः, आचाराणामिन्दुः, आचारेन्दुः, आचाराणां प्रकाशक इत्यर्थः ।

सन्तः शिष्टस्तेषां स्वरूपमाह बौधायनः— शिष्टाः खलु गतमत्सरा निरहङ्काराः कुम्भीधान्या[1] अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः। इति । लौकिकाचारस्याप्यावश्यकत्वमुक्तं स्मृत्यन्तरे—

**यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ।**
**तथाऽपि लौकिकाचारं मनसाऽपि न लङ्घयेत् ॥** इति।

तथा—

**सामयाचारिको धर्मो देशजातिकुलोद्भवः ।**
**ग्रामाचाराः परिग्राह्याः सर्वत्रैव यथोदितम् ॥** इति।

आचारार्के बृहस्पतिः—

**दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।**
**अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥**

सर्वेषां विप्रराजन्यविट्शूद्राणां धर्मलक्षणानीत्यर्थः । दयादीनां लक्षणमाह स एव —

**परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा।**
**आपन्ने रक्षितव्यं[2] तु दयैषा परिकीर्तिता ॥**
**बाह्ये वाऽऽभ्यन्तरे वाऽपि दुःख उत्पादिते परैः ।**
**न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥**
**गुणान्न गुणिनो हन्ति स्तौति मन्दगुणानपि ।**
**नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ॥**
**अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।**
**स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम् ॥**
**शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।**
**अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते ॥**

---

१. कुम्भी घटी ( गगरीति भाषायां) मात्रं धान्यं येषां ते कुम्भीधान्याः । सप्ताहपर्यन्तभोजनार्थ-धान्यवन्त इत्यर्थः । षडहपर्याप्तधान्यः कुम्भीधान्यः । मूल एवोक्तः, पृ० २४८ ।

२. रक्षितव्ये त्विति पाठान्तरं न समीचीनम् ।

**प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।**
**एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥**
**स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना ।**
**अहन्यहनि यत्किञ्चिदकार्पण्यं हि तत्स्मृतम् ॥**
**यथोत्पन्नेन सन्तोषः कर्त्तव्यो ह्यल्पवस्तुनि ।**
**परस्याचिन्तयन्नर्थं साऽस्पृहा परिकीर्तिता ॥** इति।

धर्ममूलमाह याज्ञवल्क्यः—

**श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**
**सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥** इति ।

श्रुतिर्वेदः । स्मृतिर्मनुपराशराद्युक्तिः । सदाचारः सतां शिष्टानामाचारोऽनुष्ठानम् । स्वस्य चाऽऽत्मनः प्रियं वैकल्पिके विषये । यथा गर्भाष्टमेऽष्टमे वाऽब्द इत्यादावात्मेच्छैव नियामिका । सम्यक् सङ्कल्पाज्जातः कामः । शास्त्राविरुद्धः । यथा मया भोजनव्यतिरेकेणोदकं न पातव्यमिति । एते धर्मस्य मूलं प्रमाणम् । एतेषां विरोधे पूर्वपूर्वबलीयस्त्वमिति। तथा च सङ्ग्रहे—

**श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् ।**
**पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो विदुः ॥** इति ।

स्मृत्याचारयोर्विरोधे स्मृतिरेव बलवती । यथा श्रुतिस्मृत्योर्विरोधे श्रुतिः । इदानीन्तनाचारेण स्मृतिः स्मृत्या च श्रुतिः कल्पनीयेत्याचारस्य ह्यन्तरितप्रामाण्येन प्रत्यक्षानुमानयोर्विरोधेऽनुमानस्यैव बहिरङ्गत्वेन दुर्बलत्वात् । तदेतत्सकलमभिप्रेत्योक्तं मनुना—

**यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।**
**श्रुतिस्मृत्यविरोधेन सदाचारः स उच्यते ॥** इति ।

स्कान्देऽपि च—

**रागद्वेषविनिर्मुक्तैर्विद्वद्भिर्यदनुष्ठितः ।**
**सदाचारः स विज्ञेयो धर्ममूलो मनीषिभिः ॥**

अत्र रागद्वेषराहित्यविशेषणात्पराशरादिकृतकैवर्तकन्यागमनादेरनाचरणीयत्वमुक्तम् । इदमेवाभिप्रेत्याऽऽह हारीतः–

**अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ।**

**नानुष्ठेयं मनुष्यैस्तत्तदुक्तं कर्म आचरेत् ॥** इति ।

श्रुत्यादिद्वैधे मनुः–

**श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।**

**स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ॥**

मनुस्मृतेस्तु विशेषमाहाङ्गिराः–

**मन्वर्थविपरीता तु या स्मृतिः सा विनश्यति ॥** इति ।

श्रुतिश्च– 'यद्वै किं च मनुरवदत्तद्भेषजम्' इति ।

स्मृत्यन्तरे–

**स्मृत्यन्तरविरोधे तु कलौ पाराशरस्मृतिः ॥** इति।

कल्पसूत्रस्मृत्योर्विरोधे तु प्रत्यक्षश्रुतिमूलत्वेन कल्पसूत्रं प्रबलमित्याह हेमाद्रौ सङ्ग्रहे पौलस्त्यः–

**श्रौतानां कर्मणां क्लृप्तिः कल्पसूत्रं तदुच्यते ।**

**तथैव गृह्यकल्पानां स्मार्तानामुपसङ्ग्रहः ॥**

**शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः ।**

**नानाप्रकरणस्थत्वात्स्मृतेर्मूलं न लक्ष्यते ॥**

## अथोपोद्घातप्रकरणम्[1]

अत्र सर्वशाखाप्रत्ययमेकं कर्मेति न्यायेन सर्वशाखागृह्यसूत्रपरिशिष्टस्मृतिपुराणेतिहासाचारावगतसकलपदार्थोपसंहारेणैव स्नान–

---

१. उपोद्पूर्वकं हन् धातोः घञि कृते 'हनस्तोऽचिण्णलोः' सूत्रेण नकारस्य तकारे उपधावृद्धौ 'चजोः कुघिण्यतोः' इति सूत्रेण हकारस्य धकारे उपोद्घात' इति, प्राक्कथनमित्यर्थः। तस्य लक्षणं साहित्यदर्पणे-पदानि त्वगतार्थानि तदर्थगतये नराः। योजयन्ति पदैरन्यैः स उद्घातक उच्यते।।

सन्ध्यादिधर्मानुष्ठानं सर्वसम्मतम् । तत्र

**यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते ।**
**अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते ॥**
**तस्मात्सर्वप्रायत्नेन स्वसूत्रं न च लङ्घयेत् ॥**

इति विष्णुधर्मोत्तरादिवचनैः स्वसूत्राविरोधिशास्त्रान्तरपरिग्रहः कर्तव्यः। अत एव भविष्यत्पुराण उक्तम्—

**यन्नाऽऽम्नातं स्वशाखायां [१]पारक्यमविरोधि यत्।**
**विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा ॥** इति।

कार्ष्णाजिनिरप्याह—

**आत्मतन्त्रे तु यन्नोक्तं तत्कुर्यात्पारतन्त्रिकम् ।**
**विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥** इति ।

ननु कृत्स्नसूत्रस्मृत्याद्युपसंहारस्य मानुषेण कर्तुमशक्यत्वात्कर्मण्यनधिकार एव सर्वेषामिति चेत्, माधव आह—

**विशेषादर्शनं यावत्तावत्सामान्यदर्शनम् ।**
**मान्यमेवान्यथा ते स्यात्सर्वज्ञत्वेऽधिकारिता ॥**
**गुणोपसंहृतिश्चैव यथादर्शनमिच्छताम् ।**
**अदृष्टानुपसंहारे नाकिञ्चित्करता व्रते ॥**
**यद्यावद् दृश्यते वाक्यं शक्तिश्चात्रास्य यावती ।**
**तावत्कर्तुं न तूपेक्षा युक्ता वैगुण्यशङ्कया ॥** इति ।

यद्वा स्वसूत्रेतिकर्तव्यतामात्रमेव कर्म कर्तव्यम् । तदुक्तं वैजवापायनेन—

**बह्वल्पं वा स्वशाखोक्तं यस्य कर्म प्रचोदितम् ।**
**तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥**

लौंगाक्षिणाऽपि—

**ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः ।**
**तेन सन्तनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकम् ॥** इति ।

१. परकीयमित्यर्थः।

गृह्यपरिशिष्टमपि स्वस्वसूत्रसमम् । गृह्यपरिशिष्टमिति समाख्या-बलात् । तथा हि- अथास्मिन्नाश्वलायनगृह्ये यानि कानिचिदन्यत्रोक्तानि तानीहेच्छताऽऽचार्येणानुमितानि ज्ञापितानि यानि चोक्तप्रदर्शितक्रियाणि तानि सर्वावबोधाय यथावदभिधास्याम इति आश्वलायनगृह्यपरिशिष्टम् । अत एव जगद्गुरुभट्टैरपि ग्रहमखप्रकरण उक्तम्- आश्वलायनानां स्वगृह्यपरि-शिष्टोक्तग्रहमखः । तस्य सूत्रसमत्वादिति । अथ गृह्यपरिशिष्टशौनक-गृह्यकारिकाणां विरोधे किमुचितमित्यपेक्षायां पारिजात उक्तम् - कारिकागृह्यपरिशिष्टविरोधे परिशिष्टोक्तमेवानुसन्धेयमाचार्येणोक्तवचनत्वात्। तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेदिति वचनाच्चेति। गृह्यपरिशिष्ट-शौनकयोर्विरोधे परिशिष्टोक्तमेवानुसन्धेयम् । आचार्येणोक्तवचनत्वादिति। आचारानुष्ठाने प्रशस्तं देशमाह याज्ञवल्क्यः-

**यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान्निबोधत ॥** इति ।

मनुरपि-

**सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।**
**तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥**
**तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।**
**वर्णानां सान्तरालानां सदाचारः स उच्यते ॥**
**कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनकाः ।**
**एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥**
**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥**
**हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि[१] ।**
**प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥**
**आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात् ।**
**तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥**

---
१. विनशनं कुरुक्षेत्रम् ।

**कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।**

**स ज्ञेयो यज्ञियो देशो म्लेच्छ देशस्ततः परम् ॥** इति।

स्वसत्ताकगृह एव सकलं कर्म कर्तव्यम् । तदुक्तं मुहूर्तमालायाम्—

**गृहस्थस्याखिलं कर्म स्वसत्ताकं गृहं विना ।**

**न सिध्यति यतस्तस्माद्गृहप्रकरणं ब्रुवे ॥** इति ।

यत्र तु बहिः सन्ध्या दशगुणेत्यादिविशेषवचनं तत्रास्य बाधः। यदि तु प्रावासादौ परगृहे कर्म करोति तदा तदनुमतिर्ग्राह्या । नाननुज्ञात-भूमिर्हि यज्ञस्य फलमश्नुत इति भारतात् । परकीयप्रदेशेषु कृतं भवति निष्फलम् । इति वचनान्तरे दोषश्रवणाच्च । तीर्थादौ तु नानुमत्यपेक्षा।

**प्रवाहमवधिं[१] कृत्वा यावद्धस्तचतुष्टयम् ।**

**तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥**

**तत्र जप्तं हुतं दत्तं कोटिकोटिगुणं भवेत् ।**

इति ब्रह्माण्डवचनात् ।

**अटवी पर्वताः पुण्या नदीतीराणि यानि च ।**

**सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥**

**वनानि गिरयो नद्यस्तीर्थान्यायतनानि च ।**

**देवखाताश्च[२] गर्ताश्च[३] न स्वाम्यं तेषु विद्यते ॥**

इत्यादिपुराणाच्च । एवं सर्वसत्त्वोद्देशोत्सृष्टघट्टधर्मशालादौ नानुमत्यपेक्षा परकीयत्वाभावादिति । भृगुः—

**नैकवासा न च द्वीपे नान्तराले कदाचन ।**

**श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् ॥**

---

१. अवधिः सीमायां काले च प्रयुज्यते । सीमा च द्विविधा पूर्वा परा च। प्रकारान्तरेण सा त्रिविधा । देशकृता, कालकृता बुद्धिकल्पिता च । अत्र देशकृता पूर्वसीमार्थे प्रयुक्ता ।

२. देवेन खातम् , खन् क्त । अकृत्रिमे जलाशये देवसमीपस्थे खाते च। यथा-नदीषु देवखातेषु तडागेषु सरित्सु च । स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥

३. भूमिछिद्रे खातभेदे च । धनुः सहस्राप्यष्टौ गतिर्यासां च विद्यते । न ता नदी शब्दाह्वा गर्तास्ता परिकीर्तिताः॥ तत्र नित्यं स्नानमाचरेत् मनुवचनात् । स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ।

अन्तरालद्वीपयोर्लक्षणं सङ्ग्रहे—

**परितो वेष्टितो देशोऽद्भिर्यः स द्वीप उच्यते ।**

**अनावृतस्तु यो देशः सोऽन्तरालं प्रकीर्तितम् ॥** इति।

अस्यापवाद आचारचन्द्रोदये—

**वृषभैकशतं यत्र गवां तिष्ठत्यसंवृतम् ।**

**न तद्धर्महतं द्वीपमेवं वेदविदो विदुः ॥**

मार्कण्डेयपुराणे—

**उदुम्बरे वसेन्नित्यं भवानी सर्वदेवता।**

**ततः सा प्रत्यहं पूज्या गन्धपुष्पाक्षतादिभिः ॥**

**पादस्य स्पर्शनं तत्र असम्पूज्य च लङ्घनम् ।**

**कुर्वन्नरकमाप्नोति तस्मात्तत्परिवर्जयेत् ॥**

**प्रातःकाले स्त्रिया कार्यं गोमयेनानुलेपनम् ।**

**अकृतस्वस्तिकां या तु क्रामेल्लिप्तां च मेदिनीम् ॥**

**तस्यास्त्रीणि विनश्यन्ति वित्तमायुर्यशस्तथा ॥**

अथाऽऽश्वलायनसूत्रोक्ताः परिभाषास्तत्र यस्तीर्थेन कर्म कर्तुं विहारं प्रपन्नस्तस्य प्राङ्निष्क्रमणान्मनोवाक्काययन्त्रणादयो नित्याः स्युरिति सर्वत्र वेदितव्यम् । कर्तुः प्राङ्मुखत्वं चेष्टानां च प्रागपवर्गता तत्साधनानां च प्रागग्रता वेदितव्या । अङ्कधारणा च नित्या वेदितव्या । सर्वदा यज्ञोपवीती स्यात्। यत्र निवीतप्राचीनावीते विधीयेते तत्रैव ते भवतो न मानुषं पैतृकं वा कर्म दृष्ट्वेति। क्रत्वर्थमप्यशुचित्वसम्पादि यत्कर्म तद्विहारान्निष्क्रम्य बहिः कर्तव्यम् । पृष्ठ्यायां यत्राऽऽसनं भवति तत्र मध्यरेखायाः किञ्चिदुत्तरत उपविशेत् । सव्यदक्षिणभेदेन द्वित्वयोगि यदङ्गं हस्तादि तस्य द्वित्वेन विना वचने दक्षिणं प्रतीयात् । अनादेशे च दक्षिणं प्रतीयात् । जपानुमन्त्रणाप्यनोपस्थानान्युपांशुमन्त्राश्च कर्मकरणाः। अयमर्थः–अनुमन्त्रणग्रहणेनाभिमन्त्रणमपि गृह्यते । जपः । अनुमन्त्रणम्। अभिमन्त्रणम् । आप्यायनम् । उपस्थानम् । मन्त्रसंज्ञका मन्त्राः । कर्मकरणमन्त्राश्च सर्वत्रोपांशु प्रयोक्तव्याः । उपांशुत्वं नाम करण-वदशब्दममनःप्रयोग उपांश्विति । तेषां लक्षणानि वृत्तिकारेणोक्तानि

ज्ञातव्यानि । सर्वत्र मन्त्रान्ते कर्मारम्भः । अनुमन्त्रणाप्यायनोपस्थानानां तु मन्त्रोच्चारणसमकालमेव क्रियेति। आसां श्रौतपरिभाषाणां गृह्ये प्राप्तिस्तूक्तानि वैतानिकानीति सूत्रवृत्तौ स्पष्टमेव साधिता। तत्र ब्रह्मयज्ञातिरिक्ते कर्मणि क्वचिदुदङ्मुखतापि तस्य नित्याः प्राञ्चश्चेष्टा इत्यनया परिभाषया सर्वत्र प्राङ्मुखत्वे सिद्धेऽपि ब्रह्मयज्ञप्रकरणे पुनः प्राङ्मुख उपविश्येति सूत्रं ब्रह्मयज्ञातिरिक्तकर्मसु क्वचिदुदङ्मुखत्वस्यापि प्राप्त्यर्थमिति वृत्तौ भाष्ये चोक्तत्वात् । जपतीति चोदनायां गृह्यकर्मण्यनित्यमुपांशुत्वमिति वृत्तौ साधितम् । आसीनाद्यनियम आसीनेनैव कर्म कर्तव्यमिति तिष्ठन् समिधमादध्यादिति सूत्रे वृत्तौ स्पष्टम् । आश्वलायनगृह्यपरिशिष्टे– कर्ता स्नातो धौतानार्द्रवासा यज्ञोपवीत्याचान्तः प्राङ्मुख आसीनो दक्षिणाङ्गकारी समाहितो मन्त्रान्ते कर्म कुर्वीत प्रत्यृचोक्तिष्वृगन्तेष्वनादेश आज्यं द्रव्यं स्रुवःकरणमवदानवत्सु दर्वीपाणिः कठिनेषु कर्मावृत्तौ मन्त्रोऽप्यावर्तते कर्मान्त आचमनं चेति सामान्यमिति । सर्वकर्माङ्गतया ज्ञानमावश्यकम् । ज्ञात्वा कर्माणि कुर्वीतेत्युक्तेः । छान्दोग्योपनिषद्यपि– यदेव विद्यया करोति श्रद्धया तदेव वीर्यवत्तरं भवतीति । छन्दोगपरिशिष्टे–

**सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।**
**विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥**

अत्र सदेत्यनेनोपवीतधारणादेः पुरुषार्थत्वं प्रतिपादितम् । विशिख इत्यादिना कर्माङ्गत्वं च । तत्र विशेषमाह कुथुमिः–

**शिखिवच्छिखया भाव्यं वामावर्तनिबद्धया ।**
**प्रदक्षिणं द्विरावर्त्य पाशान्तःसम्प्रवेशनात् ॥**
**प्रथमं द्विगुणीकृत्य ब्रह्मावर्तमितीरितम् ।**
**गायत्रीं प्रजपन्कुर्याच्छिखायाश्च निबन्धनम् ॥** इति ।

सन्ध्यारत्ने–

**विप्रादिकानां खलु मुष्टिमेय-**
**केशाः शिखा स्यादधिका ततो न ।**
**द्विधा त्रिधा वाऽपि विभज्य बन्धो**
**ह्यल्पा ततोऽल्पाऽपि न लम्बिताऽपि ॥**

